## ॥ श्री हयग्रीवद्वादशनामस्तोत्रम् ॥

ॐकारोद्गीतरूपाय ऋग्यजुःसाममूर्तये ।
नमोऽस्तु देवदेवाय वांछितार्थप्रदायिने ॥ १ ॥

अज्ञानतिमिरं छिन्दि ज्ञानमाशु प्रयच्छ मे ।
देहि मे सम्पदं देव हयशीर्ष नमोऽस्तु ते ॥ २ ॥

भूतप्रेतपिशाचादीन् छिन्दि देव जनार्दन ।
ज्वरादीन् सकलान् रोगान् नाशयाशु जगत्पते ॥ ३ ॥

दारिद्र्यं सकलं छिन्दि कुरु सौभाग्यभाजनम् ।
शत्रुनाशाय मे देव हयशीर्ष नमोऽस्तु ते ॥ ४ ॥

श्रीवश्यं च जगद्वश्यं राजवश्यं परात्परम् ।
कुरु देव प्रजावृन्दसेव्यमानपदाम्बुजम् ॥ ५ ॥

मेधां विद्यां बलं प्रज्ञां सम्पदं पुत्रपौत्रकम् ।
देहि मे सम्पदं देव हयशीर्ष नमोऽस्तु ते ॥ ६ ॥

नमो हयोत्तमाङ्गाय वान्छितार्थप्रदायिने ।
ऋग्यजुःसामरूपाय ऋताय महसे नमः ॥ ७ ॥

ऋक्षेशबिम्बमध्यस्थराजीवासनभाजन ।
नमो वेदान्तवेद्याय वेदाहरणकर्मणे ॥ ८ ॥

प्रणवोद्गीतवचने प्रणवं प्रतिपादाय ।
वेदाहरणमहामोहकर्मणे ब्रह्मणे नमः ॥ ९ ॥

मनीषाप्रददेवाय महाश्वशिरसे नमः ॥ १० ॥

हंसाय परमेशाय चन्द्रमण्डलवासिने ।
इति द्वादशमन्त्रेण नमस्कुर्याद् हयाननम् ॥ ११ ॥

॥ इति श्रीहयग्रीवद्वादशनामस्तोत्रम् ॥